# महाभाष्यम् (पश्पशाह्निकम् Part-2)

## ॥ पूर्व के कुछ ध्यातव्य अंश ॥

- शब्दों के अनुशासन के लिये इस शास्त्र का आरम्भ किया गया।
- "अथ शब्दानुशासनम्" अथ शब्द का अर्थ अधिकार है।
- शब्द दो प्रकार के होते हैं – लौकिक और वैदिक।
- येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति स शब्दः - यह गौः शब्द की परिभाषा है।
- "प्रतीतपदार्थको लोके ध्वनिः शब्दः" यह शब्द की परिभाषा है।
- शब्दानुशासन के पांच मुख्य प्रयोजन हैं –
- रक्षा, ऊह , आगम, लघु, असन्देह।

## ॥ आनुषङ्गिकप्रयोजनानि ॥

इमानि च भूयः शब्दानुशासनस्य प्रयोजनानि- १-तेऽसुराः। २-दुष्टः शब्दः। ३-यदधीतम्। ४-यस्तु प्रयुङ्क्ते। ५-अविद्वांसः। ६-विभक्तिं कुर्वन्ति। ७-यो वा इमाम्। ८-चत्वारि। ९-उत त्वः। १०-सक्तुमिव। ११- सारस्वतीम्। १२- दशम्यां पुत्रस्य। १३- सुदेवो असि वरुण इति ॥

## ॥१. तेऽसुराः ॥

तेऽसुरा हेलयो हेलय इति कुर्वन्तः पराबभूवुः। तस्माद् ब्राह्मणेन न म्लेच्छितवै नापभाषितवै। म्लेच्छो ह वा एष यदपशब्दः। म्लेच्छा मा भूमेत्यध्येयं व्याकरणम्। तेऽसुराः ॥

## ॥२. दुष्टः शब्दः ॥

दुष्टः शब्दः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥ इति ॥ दुष्टाञ्छब्दान्मा प्रयुङ्क्ष्महीत्यध्येयं व्याकरणम्। दुष्टः शब्दः ॥

## ॥३. यदधीतम् ॥

यदधीतमविज्ञातं निगदेनैव शब्द्यते। अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित् ॥ तस्मादनर्थकं माधिगीष्महीत्यध्येयं व्याकरणम्। यदधीतम् ॥

## ॥४. यस्तु प्रयुङ्क्ते॥

यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान् यथावद् व्यवहारकाले।
सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद् दुष्यति चापशब्दैः

॥ कः ? वाग्योगविदेव॥ कुत एतत् ?

यो हि शब्दाञ्जानात्यपशब्दानप्यसौ जानाति। यथैव हि शब्दज्ञाने धर्मः, एवमपशब्दज्ञानेऽप्यधर्मः। अथ वा भूयानधर्मः प्राप्नोति। भूयांसोऽपशब्दाः, अल्पीयांसः शब्दाः इति। एकैकस्य हि शब्दस्य बहवोऽपभ्रंशाः। तद्यथा- गौरित्यस्य शब्दस्य गावी गोणी गोता गोपोतलिकेत्येवमादयोऽपभ्रंशाः। अथ योऽवाग्योगवित्, अज्ञानं तस्य शरणम्॥

विषम उपन्यासः। नात्यन्तायाऽज्ञानं शरणं भवितुमर्हति। यो ह्यजानन्वै ब्राह्मणं हन्यात् सुरां वा पिबेत्सोऽपि मन्ये पतितः स्यात् ॥ एवं तर्हि- सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद् दुष्यति चापशब्दैः ॥ कः ? अवाग्योगविदेव। अथ यो वाग्योगविद्, विज्ञानं तस्य शरणम् ॥ क्व पुनरिदं पठितम् ? भ्राजा नाम श्लोकाः ॥ किं च भोः श्लोका अपि प्रमाणम् ? किं चातः ? यदि श्लोका अपि प्रमाणम्, अयमपि श्लोकः प्रमाणं भवितुमर्हति-

यदुदुम्बरवर्णानां घटीनां मण्डलं महत्।
पीतं न गमयेत्स्वर्गं किं तत् क्रतुगतं नयेत् ॥ इति।

प्रमत्तगीत एष तत्रभवतः। यस्त्वप्रमत्तगीतस्तत्प्रमाणम् ॥ यस्तु प्रयुङ्क्ते ॥

## ||५. अविद्वांसः ||

अविद्वांसः प्रत्यभिवादे नाम्नो ये न प्लुतिं विदुः| कामं तेषु तु विप्रोष्य स्त्रीष्विवायमहं वदेत् || अभिवादे स्त्रीवन्मा भूमेत्यध्येयं व्याकरणम्| अविद्वांसः ||

## ||६. विभक्तिं कुर्वन्ति ||

याज्ञिकाः पठन्ति- प्रयाजाः सविभक्तिकाः कार्या इति| न चान्तरेण व्याकरणं प्रयाजाः सविभक्तिकाः शक्याः कर्तुम्|विभक्तिं कुर्वन्ति ||

## ||७. यो वा इमाम् ||

यो वा इमां पदशः स्वरशोऽक्षरशश्च वाचं विदधाति स आर्त्विजीनो भवति| आर्त्विजीनाः स्यामित्यध्येयं व्याकरणम्| यो वा इमाम् ||

## ॥८. चत्वारि ॥

चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य। त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यान् आविवेश ॥ इति।

चत्वारि शृङ्गाणि। चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च। त्रयो अस्य पादाः- त्रयः काला- भूतभविष्यद्वर्तमानाः। द्वे शीर्षे- द्वौ शब्दात्मानौ नित्यः कार्यश्च। सप्तहस्तासो अस्य- सप्त विभक्तियः। त्रिधा बद्धः- त्रिषु स्थानेषु बद्ध- उरसि कण्ठे शिरसीति । वृषभो वर्षणात्। रोरवीति- शब्दं करोति ॥ कुत एतत् ? रौतिः शब्दकर्मा ॥

महो देवो मर्त्यान् आविवेशेति। महान् देवः शब्दः। मर्त्या मरणर्धम्माणो मनुष्यास्तानाविवेश। महता देवेन नः साम्यं यथा स्यादित्यध्येयं व्याकरणम्॥

अपर आह- चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः। गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति॥

चत्वारि वाक्परिमितानि पदानि- चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च। तानि विदुर्ब्राह्मणा ये मनीषिणः। मनस इषिणो मनीषिणः। गुहा त्रीणि निहिता नेङ्गयन्ति। गुहायां त्रीणि निहितानि नेङ्गयन्ति- न चष्टन्ते। न निमिषन्तीत्यर्थः। तुरीयं वाचो मनुष्या वदन्ति। तुरीयं वा एतद्वाचो यन्मनुष्येषु वर्तते चतुर्थमित्यर्थः। चत्वारि॥

## ॥ १. उत त्वः ॥

उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम्।
उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उसती सुवासाः ॥

उत त्वः अपि खल्वेकः पश्यन्नपि न पश्यति वाचम्। अपि खल्वेकः शृण्वन्नपि न शृणोत्येनाम् इति अविद्वांसमाहार्धम्। उतो त्वस्मै तन्वं विसस्रे- तनुं विवृणुते। जायेव पत्य उशती सुवासाः। तद्यथा-- जाया पत्ये कामयमाना सुवासाः स्वमात्मानं विवृणुते एवं वाग् वाग्विदे स्वात्मानं विवृणुते। वाङ्नो विवृणुयादात्मानमित्यध्येयं व्याकरणम्। उत त्वः ॥

## ॥१०. सक्तुमिव॥

सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत। अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीः निहिताऽधि वाचि॥

सक्तुः सचतेर्दुर्धावो भवति। कसतेर्वा विपरीताद् विकसितो भवति। तितउ परिपवनं भवति। ततवद्वा- तुन्नवद्वा। धीरा- ध्यानवन्तः। मनसा- प्रज्ञानेन। वाचमक्रत- वाचमकृषत।

अत्रा सखायः सख्यानि जानते। अत्र सखायः सन्तः सख्यानि जानते। क्व ? य एष दुर्गो मार्ग एकगम्यो वाग्विषयः॥ के पुनस्ते ? वैयाकरणाः॥ कुत एतत् ?

भद्रैषां लक्ष्मीर्निहिता अधि वाचि। एषां वाचि भद्रा लक्ष्मीर्निहिता भवति। लक्ष्मीर्लक्षणात् भासनात्परिवृढा भवति। सक्तुमिव॥

## ॥११. सारस्वतीम् ॥

याज्ञिकाः पठन्ति- आहिताग्निरपशब्दं प्रयुज्य प्रायश्चित्तीयां सारस्वतीमिष्टिं निर्वपेत्। प्रायश्चित्तीया मा भूमेत्यध्येयं व्याकरणम्। सारस्वतीम् ॥

## ॥१२. दशम्यां पुत्रस्य ॥

याज्ञिकाः पठन्ति- दशम्युत्तरकालं पुत्रस्य जातस्य नाम विदध्याद् घोषवदाद्यन्तरन्तःस्थमवृद्धं त्रिपुरुषानूकमनरिप्रतिष्ठितम्। तद्धि प्रतिष्ठिततमं भवति। द्व्यक्षरं चतुरक्षरं वा नाम कृतं कुर्यान्न तद्धितम् इति।

न चान्तरेण व्याकरणं कृतस्तद्धिता वा शक्या विज्ञातुम्। दशम्यां पुत्रस्य।

## ॥१३. सुदेवो असि वरुण ॥

सुदेवो असि वरुण यस्य ते सप्त सिन्धवः। अनुक्षरन्ति काकुदं सूर्म्यं सुषिरामिव ॥ सुदेवो असि वरुण- सत्यदेवोऽसि। यस्य ते सप्त सिन्धवः- सप्त विभक्तयः। अनुक्षरन्ति काकुदम्। काकुदम्- तालु। काकुर्जिह्वा, सास्मिन्नुद्यत इति काकुदम्। सूर्म्यं सुषिरामिव। तद्यथा- शोभनामूर्मिं सुषिरामग्निरन्तः प्रविश्य दहति, एवं ते सप्त सिन्धवः- सप्त विभक्तयस्ताल्वनुक्षरन्ति। तेनासि सत्यदेवः। सत्यदेवाः स्यामेत्यध्येयं व्याकरणम्। सुदेवो असि ॥

